भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः। भ्रावेयः ॥

## कल्याण्यादीनामिनङ् ॥ १२६ ॥

'कल्याणी' – इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशः। स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणम्; प्रत्ययस्य सिद्धत्वात्। अन्येषामुभयार्थम्। काल्याणिनेयः। सौभागिनेयः। दौर्भागिनेयः। 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः।

कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कनिष्ठा। मध्यमा। परस्त्री ॥

## कुलटाया वा ॥ १२७ ॥

कुलान्यटतीति कुलटा; पररूपं निपातनात्। कुलटाया अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति। आदेशार्थं वचनम्, प्रत्ययः पूर्वेणैव सिद्धः। कौलटिनेयः, कौलटेयः।

या तु कुलान्यटन्ती शीलं भिनत्ति, ततः 'क्षुद्राभ्यो वा' इति परत्वाड् ढ्रका भवितव्यम् – कौलटेरः ॥

### पदमञ्जरी

*कुलटाया वा* ॥ *कुलान्यटतीति कुलटेति*। मूलविभुजादिषु दर्शनात्कः प्रत्ययः। पचाद्यच् तु न लभ्यते, अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेत्यण्प्रसङ्गात्। *या तु कुलान्यटन्ती शीलं भिनत्तीति*। एकत्र कुले प्रविष्टा स्वैरिणी या कुलान्तरमटति सा दुःशीला कुलटेत्यर्थः। *क्षुद्राभ्यो वेति परत्वादिति*। क्षुद्राः – अङ्गहीनाः शीलहीनाश्च। या पुनर्भिक्षालिप्सया सुशीलापि कुलान्यटति, तस्या इह ग्रहणम् ॥

### न्यासः

विकर्णकुषीतकात् काश्यपे ॥ भ्रुवो वुक् च ॥ कल्याण्यादीनामिनङ् ॥

कुलटाया वा ॥ कुलान्यटतीति कुलटा। नन्वकः सवर्णे दीर्घत्वे कृते कुलाटेति भवितव्यमित्यत आह—पररूपमित्यादि। पूर्वेणैवेति। 'स्त्रीभ्यो ढक्' इत्यनेनैव। व्यवहितेऽपि पूर्वव्यपदेशः प्रवर्तते, यथा—मथुरायाः पाटलिपुत्रं पूर्वमिति।

कौलटेर इति। एयादेशे कृते वलि यलोपः ॥